आदित्य तेजस्तप्ताः क्षणलवदिवसा ऋतवः परिणमन्ति ।

पूरयति च निम्न स्थलं तमाहुरभिवर्द्धितं जानीहि ॥५॥ इतिच्छाया,

अस्यार्थस्तु–यस्मिन् संवत्सरे 'खणलवदिवसा' क्षणलवदिवसा 'उऊ' ऋतव-वसन्ताद्याः 'आइच्चतेयतविया' आदित्यतेजस्तप्ताः आदित्यस्य संबन्धिन स्तेजसा-खरकिरणेन कृत्वा तप्ता-अतीव संतप्ताः सन्तः 'परिणमन्ति-परिणाममासादयन्ति, तथा यश्च संवत्सरः 'णिण्ण-थले य पूरेइ' सर्वाण्यपि निम्नस्थलानि-अधः स्थलानि जलेन पूरयति 'तमाहु अभिवद्धियं जाण' तमेतादृशं संवत्सरम् अभिवर्द्धित नामकं महर्षय आहुः-अकथयन्ति, इति जानीहि इति ॥ सम्प्रति शनैश्चरसंवत्सरं प्रश्नयन्नाह-'सणिच्छर' इत्यादि, 'सणिच्छरसंवच्छरेणं भंते ! कइविहे पन्नत्ते' शनिश्चरसंवत्सरः खलु भदन्त ! कतिविधः-कतिप्रकारकः प्रज्ञप्तः-कथित इति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'अट्ठावीसइविहे पन्नत्ते' अष्टाविंशतिविधोऽष्टाविंशति प्रकारको भवतीति प्रज्ञप्तः-कथितः, 'तं जहा' तद्यथा-'अभिईसवणे धणिट्ठा' अभिजित् श्रवणो धनिष्ठा', अभिजित् शनैश्चरसंवत्सरः, श्रवणः शनैश्चर संवत्सरः, धनिष्ठा शनैश्चरसंवत्सरः 'सयभिसया' शतभिषक् शनैश्चरसंवत्सरः 'दो य होंति भद्दवया' द्वे च भवतो भाद्रपदे पूर्वाभाद्रपदशनैश्चरसंवत्सरः उत्तरभाद्रपदशनैश्चरसंवत्सर इत्यर्थः, 'रेवई अस्सिणी भरिणी' रेवती अश्विनी भरिणी' रेवती शनैश्चरसंवत्सरः अश्विनी

---

**जिस संवत्सर में सूर्य के प्रखर ताप से क्षण, लव और दिवस तपे रहते हैं ओर जिसमें निम्नस्थल जल से परिपूर्ण बने रहते हैं ऐसे संवत्सर को महर्षि जन अभिवर्द्धित संवत्सर कहते हैं ।**

**अब गौतमस्वामी शनैश्चर संवत्सर के सम्बन्ध मे पूछते हैं 'सणिच्छरसंवच्छरेणं भंते ! कइविहे पण्णत्ते' हे भदन्त ! शनैश्चर संवत्सर कितने .प्रकार का कहा गया है ? उत्तर में प्रभु कहते हैं-'गोयमा ! अट्ठावीसइविहे पण्णत्ते' हे गौतम ! शनैश्चर संवत्सर २८ प्रकार का कहा गया है 'तं जहा' जैसे 'अभिई संवणे धणिट्ठा' अभिजित् शनैश्चर संवत्सर, श्रवणशनैश्चर संवत्स, धनिष्ठा शनैश्चर संवत्सर, 'सयभिसया दोय होंति भद्दवया' शतभिषक् शनैश्चर संव-**

---

સ્થળો જળથી પરિપૂર્ણ રહે છે. એવા સંવત્સરને મહર્ષિઓ અભિવાર્દ્ધત સંવત્સર કહે છે.

હવે ગૌતમસ્વામી-શનૈશ્ચર સંવત્સરના સબંધમાં પૂછે છે-'सणिच्छरसंवच्छरेणं भंते ! कइविहे पण्णत्ते' હે ભદંત ! શનિશ્ચર સંવત્સર કેટલા પ્રકારનો કહેવામાં આવેલો છે? એના જવાબમાં પ્રભુ કહે છે-'गोयमा ! अट्ठावीसइविहे पण्णत्ते' હે ગૌતમ ! શનૈશ્ચર સંવત્સર ૨૮ પ્રકરનો કહેવામાં આવેલો છે. 'तं जहा' જેમકે-'अभिई संवणे धणिट्ठा' અભિજિત્ શનૈશ્ચર સંવત્સર, શ્રવણ શનૈશ્ચર સંવત્સર, ધનિષ્ઠા શનૈશ્ચર સંવત્સર, 'सय-भिसया दो य होंति भद्दवया' શતભિષક્ શનૈશ્ચર સંવત્સર, પૂર્વ ભાદ્રપદ શનૈશ્ચર સંવત્સર અને ઉત્તરભાદ્રપદ શનૈશ્ચર સંવત્સર 'रेवइ अस्सिणी भरिणी' રેવતી શનૈશ્ચર સંવત્સર

शनैश्चरसंवत्सरः भरिणी शनैश्चरसंवत्सरः । 'कित्तिय तह रोहिणी चेव' कृत्तिका तथा रोहिणी चैव, कृत्तिका शनैश्चरसंवत्सरः तथा रोहिणी शनैश्चरसंवत्सरः 'जाव उत्तराओ आसाढाओ' यावद् उत्तराषाढाः, उत्तराषाढशनैश्चरसंवत्सरः, अत्र यावत्पदेन मृगशीर्षार्द्रा पुष्य पुनर्वसु अश्लेषा मघा पूर्वादीनां संग्रहो भवति, तत्र यस्मिन् संवत्सरे अभिजिता नक्षत्रेण सह शनैश्चरः संबन्धमुपादत्ते सोऽभिजित् शनैश्चरसंवत्सरः, तथा श्रवणेन सह यस्मिन् संवत्सरे शनैश्चरो योगमुपादत्ते स श्रवणसंवत्सर इति, एवं सर्वत्रापि वक्तव्यम् । अथवा प्रकारान्तरेण शनैश्चरसंवत्सरं वक्तुमाह-'जंवा' इत्यादि, 'जंवा सणिच्चरे महग्गहे' यद्वा शनैश्चरो महाग्रहः 'तीसाए संवच्छरेहिं' त्रिंशता संवत्सरैः वर्षैः 'सव्वं णक्खत्तमंडलं समाणेइ' सर्वं नक्षत्र-मण्डलम् अभिजिदादि उत्तराषाढान्तं समापयति एतावान् कालविशेषः त्रिंशद्वर्षप्रमाणः शनैश्चरसंवत्सरः । उपसंहरन्नाह-'सेत्तं सणिच्छरसंवच्छरे' सोऽयं शनैश्चरसंवत्सर इति संवत्सरस्वरूपनिरूपणमिति ॥सू० १७॥

---

त्सर, पूर्वभाद्रपद शनैश्चर संवत्सर और उत्तर भाद्रपद शनैश्चर संवत्सर, 'रेवई अस्सिणी भरिणी' रेवती शनैश्चर संवत्सर अश्विनी शनैश्चर संवत्सर, भरिणी शनैश्चर संवत्सर 'कित्तिय तह रोहिणीचेव' कृत्तिका शनैश्चर संवत्सर, रोहिणी शनैश्चर संवत्सर 'जाव उत्तराओ आसाढाओ,' यावत्-उत्तराषाढ शनैश्चर संव-त्सर, तथा यावत्पद से गृहीत मृगशीर्ष शनैश्चर संवत्सर, आर्द्रा शनैश्चर संवत्सर, पुष्य शनैश्चर संवत्सर पुनर्वसु शनैश्चर संवत्सर, अश्लेषा शनैश्चर संवत्सर मघा शनैश्चर संवत्सर में.अभिजित नक्षत्र के साथ शनैश्चर संबंध का प्राप्त होता है वह अभिजित शनैश्चर संवत्सर है जिस संवत्सर में श्रवण नक्षत्र के साथ शनैश्चर का संबंध प्राप्त होता है वह श्रवणशनैश्चर संवत्सर है इसी प्रकार से और भी शेष संवत्सरों के निर्वचन में जानना चाहिये 'जं वा सणि च्चरे महग्गहे' अथवा-शनैश्चर महाग्रह है 'तीसाए संवच्छरेहिं सव्वं णक्खत्त मंडलं समाणेइ' यह ३० वर्षों में समस्त अभिजित् से लेकर उत्तराषाढान्त तक

---

અશ્વિની શનૈશ્ચર સંવત્સર ભરિણી શનૈશ્ચર સંવત્સર, 'कित्तिय तह रोहिणी चेव' કૃતિકા શનૈશ્ચર સંવત્સર રોહિણી શનૈશ્ચર સંવત્સર 'जाव उत्तराओ आसाढाओ' યાવત્ ઉત્તરાષાઢા શનૈશ્ચર સંવત્સર તેમજ યાવત્ પદથી ગૃહીત મૃગશીર્ષ શનૈશ્ચર સંવત્સર, આર્દ્રા શનૈશ્ચર સંવત્સર પુષ્ય શનૈશ્ચર સંવત્સર, પુનર્વસુ શનૈશ્ચર સંવત્સર, અશ્લેષા શનૈશ્ચર સંવત્સર, મઘા શનૈશ્ચર સંવત્સર જે સંવત્સરમાં અભિજિત નક્ષત્રની સાથે શનૈશ્ચર સંબંધને પ્રાપ્ત કરે છે તે અભિજિત્ શનૈશ્ચર સંવત્સર છે. જે સંવત્સરમાં શ્રવણ નક્ષત્રની સાથે શનૈશ્ચર સંબંધને પ્રાપ્ત થાય છે. તે શ્રવણ શનૈશ્ચર સંવત્સર છે. આ પ્રમાણે બીજા પણ સંવત્સ-રોના નિર્વાચનના સંબંધમાં જાણી લેવું જોઈએ. 'जंवा सणिच्चरे महग्गहे' અથવા શનૈશ્ચર મહાગ્રહ છે. 'तीसाए संवच्छरेहिं सव्वं णक्खत्तमंडलं समाणेइ' આ ૩૦ વર્ષોમાં

संवत्सराः कथिता सम्प्रति एतेषु संवत्सरेषु कतिमासा भवन्तीति पृच्छन्नष्टादश सूत्रमाह-'एगमेगस्स णं भंते' इत्यादि ।

मूलम्-एगमेगस्स णं भंते ! संवच्छरस्स कइ मासा पन्नत्ता? गोयमा! दुवालस मासा पन्नत्ता, तेसि णं दुविहा णामधेज्जा पन्नत्ता, तं जहा-लोइया लोउत्तरिया च, तत्थ लोइया णामा इमे तं जहा सावणे भाद्दवए जाव आसाढे, लोउत्तरिया णामा इमे तं जहा-

अभिणंदिए पइट्ठेय विजए पीइवद्धणे ।
सेयंसेय सिवे चेव सिसिरे य सहेमवं ॥१॥
णवमे वसंतमासे दसमे कुसुमसंभवे ।
एक्कारसे निदाहे य वणविरोहे य बारसमे ॥२॥

एगमेगस्स णं भंते ! मासस्स कइ पक्खा पन्नत्ता ? गोयमा ! दो पक्खा पन्नत्ता तं जहा-बहुलपक्खे य सुक्कपक्खेय । एगमेगस्स णं भंते ! पक्खस्स कइ दिवसा पन्नत्ता ? गोयमा ! पण्णरस्स दिवसा पन्नत्ता तं जहा पडिवा दिवसे वितीया दिवसे जाव पण्णरसी दिवसे, एएसि णं भंते ! पण्णरसण्हं दिवसाणं कइ णामधेज्जा पन्नत्ता ? गोयमा ! पण्णरस णामधेज्जा पन्नत्ता तं जहा-पुव्वंगे सिद्धमणोरमे य तत्तोमणोहरे चेव जसभद्दे य जसधरे छट्ठे सव्वकामसमिद्धे य ॥१॥ इदमुद्धाभिसित्ते य सोमणस धणंजए य बोद्धव्वो । अत्थ सिद्धे अभिजाए अच्चसणे सयंजए चेव ॥२॥ अग्गिवेसे उवसमे दिवसाणं होंति णामधेज्जा ॥

---

के नक्षत्र मंडल को समाप्त कर देता है । अर्थात् उन्हे प्राप्त कर लेता हैं । इस तरह इसके काल के प्रमाण ३० वर्ष का है । 'सेत्तं सणिच्चरसंवच्छरे' इस प्रकार से शनैश्चर संवत्सर के स्वरूप निरूपण होकर संवत्सर के स्वरूप का निरूपण समाप्त हो जाता है ॥१७॥

---

સમસ્ત અભિજિત્‌થી માંડીને ઉત્તરાષાઢાન્ત સુધીના નક્ષત્ર મંડળોને સમાપ્ત કરી નાખે છે. એટલે કે તેમને પ્રાપ્ત કરી લે છે. આ પ્રમાણે એના કાળનું પ્રમાણ ૩૦ વર્ષ જેટલું છે. 'से त्तं सणिच्चरसंवच्छरे' આ પ્રમાણે શનૈશ્ચર સંવત્સરના નિરૂપણથી આદી બધા સંવત્સરોના સ્વરૂપનું નિરૂપણ સમાપ્ત થઈ જાય છે. ॥૧૭॥

एएसि णं भंते ! पण्णरसण्हं दिवसाणं कइ तिही पन्नत्ता? गोयमा ! पण्णरस तिही पन्नत्ता, तं जहा–नंदे भद्दे जए तुच्छे पुण्णे पक्खस्स पंचमी। पुणरवि णंदे भद्दे जए तुच्छे पुण्णे पक्खस्स दसमी। पुणरवि णंदे भद्दे जए तुच्छे पुण्णे पक्खस्स पण्णरसी एवं ते तिगुणा तिहीओ सव्वेसिं दिवसाणं त्ति। एगमेगस्स णं भंते ! पक्खस्स कइ राइओ पण्णत्ताओ? गोयमा ! पण्णरस राइओ पण्णत्ताओ तं जहा–पडिवा राई जाव पण्णरसी राई। एयासि णं भंते ! पण्णरसण्हं राई णं कइ णामधेज्जा पण्णत्ता? गोयमा ! पण्णरस णामधेज्जा पण्णत्ता, तं जहा–

उत्तमा य सुणक्खत्ता एला वच्चा जसो हरा।
सोमणसा चेव तहा सिरिसंभूया य वोद्धव्वा ॥१॥
विजया य वेजयंति जयंति अपराजिया य।
इच्छा य समाहारा चेव तहा तेया य तहा अईतेया ॥२॥

देवाणंदा णिरई रयणीणं णामधिज्जाइं॥ एयासि णं भंते ! पण्णरसण्हं कइ तिही पण्णत्ता? गोयमा ! पण्णरस तिही पण्णत्ता तं जहा–उग्गवई भोगवई जसवई सव्वसिद्धा सुहणामा, पुणरवि उग्गवई भोगवई जसवई सव्वसिद्धा सुहणामा, पुणरवि उग्गवई भोगवई जसवई सव्वसिद्धा सुहणामा, एवं तिगुणा एते तिहीओ सव्वेसिं राईणं। एगमेगस्स णं भंते ! अहोरत्तस्स कइमुहुत्ता पन्नत्ता? गोयमा ! तीसं मुहुत्ता पन्नत्ता तं जहा–रुद्दे सेए मित्ते वाउसुवीए तहेव अभिचंदे। माहिंद बलवं बंभे बहुसच्चे चेव ईसाणे।१। तट्ठे य भावियप्पा वेसमणे वारुणे य आणंदे। विजए य वीससेणे पायावच्चे उवसमे य २। गंधव्व अग्गिवेसे आयवेय अममेय। अणवं भोमे वसहे सव्वट्ठे रक्खसे चेव त्ति ॥सू० १८॥

छाया–एकैकस्य खलु भदन्त ! संवत्सरस्य कति मासाः प्रज्ञप्ताः? गौतम ! द्वादशमासाः प्रज्ञप्ताः, तेषां द्विविधानि नामधेयानि प्रज्ञप्तानि, तद्यथा–लौकिकानि लोकोत्तराणि च तत्र लौकिकानि नामानि इमानि, तद्यथा–श्रावणो भाद्रपदो यावदाषाढः, लोकोत्तराणि नामानीमानि तद्यथा–अभिनन्दितः प्रतिष्ठितो विजयः प्रीतिवर्द्धनः श्रेयांश्च शिवश्चैव शिशिरश्च सहेमवान्।१। नवमो वसन्तमासो दशमः कुसुमसंभवः। एकादशो निदाघश्च वनविरोधश्च द्वादशः

॥२॥ एकैकस्य खलु भदन्त ! मासस्य कतिपक्षाः प्रज्ञप्ताः ? गौतम ! द्वौ पक्षौ प्रज्ञप्तौ तद्यथा-बहुलपक्षश्च शुक्लपक्षश्च । एकैकस्य खलु भदन्त ! पक्षस्य कति दिवसाः प्रज्ञप्ताः ? गौतम ! पञ्चदश दिवसाः प्रज्ञप्ताः, तद्यथा-प्रतिपद्दिवसो द्वितीया दिवसो यावत्पञ्चदशी दिवसः 'एतेषां खलु भदन्त ! पञ्चदशानां दिवसानां कतिनामधेयानि प्रज्ञप्तानि ? गौतम ! पञ्चदश-नामधेयानि प्रज्ञप्तानि तद्यथा-पूर्वाङ्गः सिद्धमनोरमश्च ततो मनोहरश्चैव । यशोभद्रश्च यशोधरः षष्ठः सर्वकामसमृद्धश्च ॥१॥ इन्द्रमूर्धाभिषिक्तश्च सौमनसो धनञ्जयश्च बोद्धव्यः । अर्थसिद्धोऽभि जातोऽत्यशनः शतञ्जयश्चैव ॥२॥ अग्निवेश्म उपशमो दिवसानां भवन्ति नामधेयानि । एतेषां खलु भदन्त ! पञ्चदशानां दिवसानां कति तिथयः प्रज्ञप्ताः ? हे गौतम ! पञ्चदशतिथयः प्रज्ञप्ताः तद्यथा-नन्दाभद्रा जयातुच्छा पूर्णापक्षस्य पञ्चमी । पुनरपि नन्दाभद्रा जयातुच्छा पूर्णापक्षस्य दशमी । पुनरपि नन्दाभद्रा जयातुच्छा पूर्णापक्षस्य पञ्चदशी । एवं ता स्त्रिगुणा. तिथयः सर्वेषां दिवसानामिति । एकैकस्य खलु भदन्त ! पक्षस्य कति रात्रयः प्रज्ञप्ताः ? गौतम ! पञ्चदश-रात्रयः प्रज्ञप्ताः तद्यथा-प्रतिपद्रात्रिर्यावत्पञ्चदशीरात्रिः । एतासां खलु भदन्त ! रात्रीणां पञ्च दशानां कतिनामधेयानि प्रज्ञप्तानि ? गौतम ! पञ्चदशनामधेयानि प्रज्ञप्तानि तद्यथा-उत्तमा च सुनक्षत्रा एलापत्या यशोधरा । सौमनसा चैव तथा श्रीसंभूता च बोद्धव्या ॥१॥ विजया वैज-यन्ती च जयन्ती अपराजिता, चेच्छा च समाहारा तेजाश्च तथा अतितेजाः ॥२॥ देवानन्दा निरतिः रजनीनां नामधेयानि । एतासां खलु भदन्त ! पञ्चदशानां रात्रीणां कति तिथयः प्रज्ञप्ताः गौतम ! पञ्चदशतिथयः प्रज्ञप्ताः, तद्यथा-उग्रवती भोगवती यशोमती शुभनामा पुन-रपि उग्रवती भोगवती यशोमती शुभनामा, पुनरपि उग्रवती भोगवती यशोमती सर्वसिद्धा शुभनामा, एवं त्रिगुणास्तिथयः सर्वासां रात्रीणाम् । एकैकस्य खलु भदन्त ! अहो रात्रस्य कतिमुहूर्त्ताः प्रज्ञप्ताः गौतम ! त्रिंशन्मुहूर्त्ताः प्रज्ञप्ताः तद्यथा रुद्रः श्रेयान् मित्रोवायुः सुप्रीतस्तथैवाभिचन्द्रः । माहेन्द्रो बलवान् ब्रह्मा बहुसत्यश्चैवेशानः ॥१॥ त्वष्टा च भावितात्मा वैश्रमणो वरुणश्चानन्दः । विजयश्च विश्वसेनः प्राजापत्य उपशमश्चैव २॥ गन्धर्वोऽग्निवेश्म शत वृषभ आतपत्रानममश्च । ऋणवान् भौमो वृषभः सर्वार्थः राक्षस श्चैव ॥ इति ॥ सू० १८॥

टीका-'एगमेगस्स णं भंते ! संवच्छरस्स' एकैकस्य खलु भदन्त ! सवत्सरस्य चान्द्रादि वर्षस्य 'कइमासा पन्नत्ता' कति-कियत्संख्यकाः मासाः प्रज्ञप्ताः कथिताः, हे भदन्त ! योऽय-

---

संवत्सरों में मासों का प्रतिपादन

'एगमेगस्सणं भंते ! संवच्छरस्स कइ मासा पन्नत्ता' इत्यादि

टीकार्थ-इस सूत्र द्वारा गौतमस्वामी ने प्रभु से ऐसा पूछा है-कि हे भदन्त एक एक संवत्सर के चान्द्रादि वर्ष के कितने कितने महिने होते हैं ? इसके उत्तर

---

સંવત્સરોમાં માસોનું પ્રતિપાદન

'एगमेगस्स ण भंते ! संवच्छरस्स कइ मासा पन्नत्ता' इत्यादि

ટીકાર્થ-આ સૂત્ર વડે ગૌતમસ્વામીએ પ્રભુને એવી રીતે પ્રશ્ન કર્યો છે કે હે ભદંત !

मनेकप्रकारकः पूर्वं संवत्सरः प्रतिपादितः तत्र प्रत्येकैकस्य सम्बन्धिनः कियत्संख्यका मासा भवन्तीति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'दुवालसमासा पन्नत्ता' द्वादश-द्वादशप्रकारका मासाः प्रज्ञप्ताः-कथिताः 'तेसिणं दुविहा णामधेज्जा पन्नत्ता' तेषां खलु द्विविधानि द्विप्रकारकाणि नामधेयानि नामानि प्रज्ञप्तानि-कथितानि, 'तं जहा' तद्यथा-'लोइया लोउत्तरियाय' लौकिकानि लोकोत्तरिकाणि च, तत्र लोकः सर्वज्ञप्रतिपादित प्रवचनबाह्यो म्लेच्छादि जनः तेषु प्रसिद्धतया तत्संबन्धीनि नामानि लौकिकानि, तथा लोकोत्तराणि लोकः प्रवचनबाह्यः तेभ्यो लोकेभ्य उत्तराः सम्यग् ज्ञानादिगुणयुक्तत्वेन प्रधानाः सर्वज्ञमतानुयायिनः श्रावकास्तेषु प्रसिद्धत्वेन तत्संबन्धीनि नामानि लोकोत्तराणि नामधेयशब्दस्य नपुंसकतया नपुंसकेन व्यवहारइति। 'तत्थ लोइया णामा इमे' तत्र-तेषु नामद्वयेषु मध्ये लौकिकानि नामानि इमानि-वक्ष्यमाणानि 'तं जहा' तद्यथा-'सावणे भद्दवए जाव आसाढे' श्रावणो भाद्रपदः यावद् आषाढः, अत्र यावत्पदेन आश्वयुजः कार्तिक मार्गशीर्षपौषमाघफाल्गुन चैत्र वैशाख ज्येष्ठमासानां ग्रहणं भवति, ततश्च श्रावणा दारभ्याषाढान्तं द्वादशलौकिकमासानां नामानि भवन्तीति मासानां लौकिकनामानि

---

में प्रभु कहते हैं-'गोयमा ! दुवालसमासा पन्नत्ता' हे गौतम ! एक एक संवत्सर के १२-१२ महिने होते हैं। 'तेसिणं दुविहा णामधेज्जा पन्नत्ता' इन महिनों के नाम दो प्रकार के कहे गये हैं 'तं जहा' जो इस प्रकार से हैं 'लोइया लोउत्तरियाय' लौकिक और लोकोत्तरिक सर्वज्ञ प्रतिपादित प्रवचन से जो बाह्य लौकिक आदिजन हैं उनजनों में जो इनके नाम प्रसिद्ध हैं वे लौकिक नाम है तथा जो लोक से उत्तर है-सम्यग्ज्ञानादि गुण विशिष्ट हैं ऐसे प्रधानव्यक्तियों में-सर्वज्ञमतानुयायी श्रावक जनों में जो इनके नाम प्रसिद्ध हैं वे लोकोत्तरिक नाम है। 'तत्थ' लोइया णामा इमे' इन दोनों नामों मे से लौकिक नाम ये हैं 'तं जहा' जैसे 'सावणे भद्दवए जाव आसाढे' श्रावण, भाद्रपद यावत् आषाढ, यहां यावत्पद से कुंआर कार्तिक, अगहन, पूष, माह, फल्गुन, चैत्र वैशाख, और ज्येष्ठ,

---

એક-એક સવત્સરના ચન્દ્રાદિ વર્ષો કેટલા માસના હોય છે? એના જવાબમા પ્રભુ કહે છે-'गोयमा ! दुवालसमासा पन्नत्ता' હે ગૌતમ ! એક-એક સંવત્સરના ૧૨-૧૨ માસો થાય છે. 'तेसिणं दुविहा णामधेज्जा पन्नत्ता' એ મહીનાઓના નામો બે પ્રકારના કહેવામાં આવેલા છે. 'तं जहा' જે આ પ્રમાણે છે-'लोइया लोउत्तरिया य' લૌકિક અને લોકોત્તરિક સર્વજ્ઞ પ્રતિપાદિત પ્રવચનથી જે બાહ્યલૌકિક વગેરે જનો છે, તે લોકોના જે નામો પ્રસિદ્ધ છે તે લૌકિક નામો છે-તેમજ જે લોકથી ઉત્તર છે-સમ્યગ્જ્ઞાનાદિ ગુણ વિશિષ્ટ છે, એવી પ્રધાનવ્યક્તિઓમાં સર્વજ્ઞમતાનુયાયી શ્રાવકજનોમાં જે એમના નામો પ્રસિદ્ધ છે, તે લોકોત્તરિક નામ છે. 'तत्थ लोइया णामा इमे' એ બન્ને નામોમાંથી લૌકિક નામો આ છે-'तं जहा' જેમકે 'सावणे भद्दवए जाव आसाढे' શ્રાવણ, ભાદ્રપદ, યાવત્ આષાઢ અહીં યાવત્ પદથી અશ્વિન, કાર્તિક માગશીર્ષ, પૌષ, માઘ, ફાલ્ગુન, ચૈત્ર, વૈશાખ અને જ્યેષ્ઠ

दर्शयित्वा लोकोत्तरिकनामानि दर्शयितुमाह-'लोउत्तरिया' इत्यादि, 'लोउत्तरिया णामा इमे' लोकोत्तरिकाणि नामानि इमानि वक्ष्यमाणानि भवन्ति 'तं जहा' तद्यथा-'अभिणंदिए पइट्ठेय' अभिनन्दितः प्रथमः द्वितीयः प्रतिष्ठितनामकः 'विजए पीइवद्धणे' तृतीयो विजयनामकः चतुर्थः प्रीतिवर्द्धनः सेयंसेय सिवे चेव' श्रेयांसश्च शिवश्चैव पञ्चम-श्रेयान् षष्ठः शिवः 'सिसिरेय सहेमवं' शिशिरश्च सहेमवान्, तत्र सप्तमः शिशिरः अष्टमो हिमवान् सूत्रे पदपूरणाय सहशब्देन समासः तेन हिमवता सह शिशिर इत्यर्थो भवति शिशिरो हिमवांश्चेति, 'णवमे वसंतमासे' नवमो वसन्तमासः 'दसमे कुसुमसंभवे' दशमः कुसुमसंभवः 'एक्कारसे निदाहेय' एकादशो निदाघो ग्रीष्मः, 'वणविरोहेय बारसमे' वन-विरोधः वनविशेषः) द्वादशः, एतानि द्वादश नामानि लोकोत्तराणि भवन्तीति ।

सम्प्रति-प्रतिमासं कियन्तः पक्षा भवन्तीति जिज्ञासायां पक्षं निरूपयितुं पक्षसूत्रमाह-'एगमेगस्स णं भंते ! मासस्स' एकैकस्य खलु भदन्त ! मासस्य 'कइ पक्खा पन्नत्ता' कति-कियत्संख्यकाः पक्षाः-मासार्द्धरूपविशेषाः प्रज्ञप्ता-कथिताः, हे भदन्त ! ये एते द्वादश-मासाः कथिता स्तेषामेकैकस्य मासस्य कियत्संख्यका पक्षा भवन्तीति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'दोपक्खा पन्नत्ता' द्वौ पक्षौ द्वि संख्यकौ पक्षौ

---

इन महिनों का ग्रहण हुआ है । 'लोउत्तरिया णामा इमे' लोकोत्तरिक नाम इस प्रकार से हैं-' तं जहा' जैसे-'अभिणंदिए पइट्ठे सह विजए पीइवद्धणे, सेयंसेय सिवे चेव सिसिरे य सहेमवं' (१) अभिनन्दित (२) प्रतिष्ठित, (३) विजय (४) प्रीतिवर्द्धन, (५) श्रेयांस (६) शिव (७) शिशिर (८) हिमवान्(९) 'णवमे वसंत मासे दसमे कुसुमसंभवे, एक्कारसे निदाहे य वणविरोहे य बारसमे' वसंतमास, (१०) कुसुम संभव, (११) निदाघ, और (१२) वनविरोह-'वर्नाव· शेष' ये १२ नाम.लोकत्तरिक हैं ।

**प्रतिमासमें पक्षों का प्रतिपादन—**

'एगमेगस्सणं भंते ! मासस्स कइ पक्खा पन्नत्ता' इस के द्वारा गौतम स्वामी ने प्रभु से ऐसा पूछा है हे भदन्त ! एक एक मासके कितने कितने पक्ष होते हैं ?

---

એ માસોના નામો ગ્રહણ થયેલા છે. 'लोउत्तरिया णामा इमे' લોકોત્તરિક નામ આ પ્રમાણે છે. 'तं जहा' જેમકે 'अभिनंदिए पइट्ठेय विजए पीइवद्धणे, सेयंसेय सिवे, चेव सिसिरेय सहेमवं' (૧) અભિનંદિત, (૨) પ્રતિષ્ઠિત (૩) વિજય (૪) પ્રીતિવર્દ્ધન, (૫) શ્રેયાન્ (૬) શિવ (૭) શિશિર (૮) હિમવાન્ (૯) 'णवमे मासे दसमे कुसुमसंभवे, एक्कारसे निदाहे य वणविरोहे य बारसमे' વસંતમાસ, (૧૦) કુસુમ સંભવ, (૧૧) નિદાઘ અને (૧૨) વનવિરોહ (વન વિશેષ) એ ૧૨ નામો લોકોત્તરિક છે.

પ્રતિમાસમાં પક્ષોનું પ્રતિપાદન

'एगमेगस्स णं भंते ! मासस्स कइ पक्खा पन्नत्ता' એના વડે ગૌતમસ્વામીએ પ્રભુને એવી રીતે પ્રશ્ન કર્યો છે કે હે ભદંત ! એક-એક માસના કેટકેટલા પક્ષો હોય છે?

प्रज्ञप्तौ कथिताविति । भेदद्वयमेव दर्शयति-'तं जहा' इत्यादि, 'तं जहा' तद्यथा-'बहुल पक्खेय सुक्कपक्खेय' बहुलपक्षः-कृष्णपक्षश्च शुक्लपक्षश्च, इमावेव सितासितशब्देन व्यवह्रियेते, तत्र कृष्णपक्षो यत्र ध्रुवराहुः स्वविमानेन चन्द्रविमानमावृणोति तेन योऽन्धकारबहुलपक्षः स बहुलपक्षः कृष्णपक्षापरपर्यायः, यत्र च स एव राहुः चन्द्रविमानमनावृतं करोति तेन चन्द्रिकाधवलिततया शुक्लपक्षः स शुक्लपक्ष इति ।

सम्प्रति कृष्णपक्ष शुक्लपक्षयोः दिवससंख्यां ज्ञातुं प्रश्नयन्नाह-'एगमेगस्स णं' इत्यादि, 'एगमेगस्स णं भंते ! पक्खस्स' एकैकस्य खलु भदन्त ! पक्षस्य 'कइ दिवसा पन्नत्ता' कति-कियत्संख्यकाः दिवसाः-दिनानि प्रज्ञप्ताः-कथिता इति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'पन्नरस दिवसा पन्नत्ता' पञ्चदश संख्यका दिवसाः प्रज्ञप्ताः-कथिताः । यद्यपि दिवसशब्दः अहोरात्रे प्रसिद्ध स्तथापि प्रकृते सूर्यप्रकाशवतः कालविशे-

---

इसके उत्तर में प्रभु कहते हैं 'गोयमा ! दो पक्खा पन्नत्ता' हे गौतम एक २ मास के दो पक्ष होते हैं । 'तं जहा' जैसे-'बहुलपक्खेय सुक्कपक्खे य' कृष्णपक्ष और शुक्लपक्ष जिस पक्ष में ध्रुव राहु अपने विमान से चन्द्र के विमान को ढक लेता है इस से जो पक्ष में अन्धकार बहुल होता है वह बहुलपक्ष है इसीका दूसरा नाम कृष्णपक्ष है और जिस पक्ष में ध्रुव राहु चन्द्र विमान को अपने विमान से अनावृत आवरण रहित-कर देता है-इस से जो पक्ष चन्द्रिका से धवलित बन जाता है वह शुक्लपक्ष है

**कृष्णपक्ष शुक्लपक्ष के दिवस संख्याकथन**

'एगमेगस्स णं भंते । पक्खस्स कइ दिवसा पन्नत्ता' हे भदन्त ! एक एक पक्षके कितने दिवस होते हैं ? इसके उत्तर में प्रभु कहते हैं-'गोयमा ! पन्नरस दिवसा पन्नत्ता' हे गौतम ! एक एक पक्ष के १५ दिवस होते हैं । यद्यपि दिवस

---

એના જવાબમાં પ્રભુ કહે છે-'गोयमा ! दो पक्खा पन्नत्ता' હે ગૌતમ ! એક માસના બે પક્ષો હોય છે. 'तं जहा' જેમકે 'बहुलपक्खे य सुक्कपक्खे य' કૃષ્ણપક્ષ અને શુકલપક્ષ જે પક્ષમાં ધ્રુવરાહુ પોતાના વિમાનથી ચન્દ્રના વિમાનને આચ્છાદિત કરી લે છે, એનાથી જે પક્ષ અંધકાર બહુલ હોય છે તે બહુલ પક્ષ છે એનું જ બીજું નામ કૃષ્ણપક્ષ છે. અને જે પક્ષમાં ધ્રુવરાહુ ચન્દ્ર વિમાનને પોતાના વિમાનથી અનાવૃત-આવરણ રહિત કરી નાખે છે એનાથી જે પક્ષ ચન્દ્રિકાથી ધવલિત બને છે તે શુકલપક્ષ છે.

**કૃષ્ણપક્ષ શુકલપક્ષમાં દિવસ સંખ્યા કથન**

'एगमेगस्सणं भंते ! पक्खस्स कइदिवसा पन्नत्ता' હે ભદંત ! એક-એક પક્ષના કેટલા દિવસો હોય છે ? એના જવાબમાં પ્રભુ કહે છે-'गोयमा ! पन्नरस दिवसा पन्नत्ता' હે ગૌતમ ! એક-એક પક્ષના ૧૫ દિવસો હોય છે યદ્યપિ દિવસ શબ્દ અહોરાત્રમાં પ્રસિદ્ધ છે તથાપિ પ્રકૃતમાં સૂર્યપ્રકાશવાળા કાળ વિશેષને જ દિવસ શબ્દથી વિવક્ષા થયેલી છે.

षस्यैव दिवसशब्देन विवक्षणात् यतो रात्रिविभाग प्रश्नस्य पार्थक्येन विधास्यमानत्वादिति। अत्र पञ्चदश दिवसा इति कथनं कर्ममासापेक्षया द्रष्टव्यं तत्रैव पूर्णानां पञ्चदशाहोरात्राणां संभवात् तमेव पञ्चदशभेदं दर्शयति-'तं जहा' इत्यादि, 'तं जहा' तद्यथा-'पडिवा दिवसे बितीया दिवसे जाव पन्नरसी दिवसे' प्रतिपद्दिवसो द्वितीया दिवसो यावत् पञ्चदशी दिवसः, तत्र मासस्याद्यतया प्रतिपद्यते इति प्रतिपत् प्रथमो दिवस इत्यर्थः, तथा द्वितीयो दिवस इति द्वितीया, यावत्पदेन तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी अष्टमी नवमी दशम्येकादशी द्वादशी त्रयोदशी चतुर्दशीनां ग्रहणं भवति, अन्ते पञ्चदशी पञ्चदशो दिवस इति। 'एएसिणं भंते! पण्णरसण्हं दिवसाणं' एतेषां प्रतिपादादीनां खलु भदन्त! पञ्चदशदिवसानाम् 'कइ णामधेज्जा पन्नत्ता' कति-कियत्संख्यकानि नामधेयानि-नामानि प्रज्ञप्तानि लोकोत्तरशास्त्रे कथितानीति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम! 'पण्णरस नाम-

---

शब्द अहोरात्र मे प्रसिद्ध है तथापि यहां पर सूर्य प्रकाश वाले कालविशेष की ही दिवस शब्द से विवक्षा हुइ है क्योंकि रात्रि विभाग प्रश्न अलग रूप से किया जाने वाला है यहां एक पक्ष में १५ दिन होते है ऐसा जो कथन किया गया वह कर्ममास की अपेक्षा किया गया है क्योंकि वहीं पर पूर्ण १५ अहोरात्र का होना संभवित है 'तं जहा' वे १५ दिन ये हैं-'पडिवा दिवसे, बितीया दिवसे, जाव पन्नरसी दिवसे' प्रतिपादा दिवस, द्वितीया दिवस यावत् पञ्चदशी दिवस, प्रतिपदा यह मासका प्रथम दिवस है द्वितीया यह मास का द्वितीय दिवस है यहां यावत्पद से 'तृतीया, चतुर्थी पंचमी, षष्ठी सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, और चतुर्दशी' इन दिनों का ग्रहण हुआ हैं अन्त के दिनका नाम पञ्चदशी है यह पक्ष का १५ वां दिन है 'एएसिणं भंते! पण्णरसण्हं दिवसाणं कइ णामधेज्जा पन्नत्ता' हे भदन्त! इन १५ दिनों के लोकोत्तर शास्त्र में कितने कितने नाम कहे हैं? उत्तर में प्रभु

---

કેમકે રાત્રિ વિભાગ પ્રશ્ન અલગ રૂપમાં સ્પષ્ટ કરવામાં આવનાર છે અહીં એક પક્ષમાં ૧૫ દિવસ હોય છે એવું જે કથન કરવામાં આવેલું છે. તે કર્મમાસની અપેક્ષાએ કરવામાં આવેલું છે. કેમકે ત્યાંજ પૂર્ણ અહોરાત્રની શકયતા છે. 'तं जहा' તે ૧૫ દિવસો આ પ્રમાણે છે-'पडिवा दिवसे बितीया दिवसे, जाव पन्नरसी दिवसे' પ્રતિપદા દિવસ, દ્વિતીયા દિવસ યાવત્ પંચદશી દિવસ પ્રતિપદા એ માસનો પ્રથમ દિવસ છે. દ્વિતીયા આ માસનો બીજો દિવસ છે. અહીં યાવત્ પદથી 'તૃતીયા, ચતુર્થી, પંચમી, ષષ્ઠી, સપ્તમી, અષ્ટમી, નવમી, દશમી, એકાદશી, દ્વાદશી ત્રયોદશી, અને ચતુર્દશી આ દિવસો ગ્રહણ થયા છે. અંતિમ દિવસનું નામ પંચદશી છે. આ એક પક્ષનો ૧૫ મો દિવસ છે. 'एएसि णं भंते! पण्णरसण्हं दिवसाणं कइ णामधेज्जा पन्नत्ता' હે ભદંત! એ ૧૫ દિવસોના લોકોત્તર શાસ્ત્રમાં કેટકેટલા નામો કહેવામાં આવેલ છે? જવાબમાં પ્રભુ કહે છે-'गोयमा!

धेज्जा पन्नत्ता' पञ्चदशनामधेयानि प्रज्ञप्तानि लोकोत्तरशास्त्रे कथितानि, 'तं जहा' तद्यथा-'पुव्वंगे सिद्धमणोरमेय' पूर्वाङ्गः सिद्धमनोरमश्च 'तत्तो मणोहरे चेव' तृतीयो मनोहरश्चैव 'जसभद्देय जसधरे' यशोभद्रश्च यशोधरः 'सट्ठे सव्वकामसमिद्धेय' षष्ठः सर्वकामसमृद्धश्च 'इंदमुद्धाभिसित्तेय' इन्द्र मूर्धाभिषिक्तश्च 'सोमणस धणंजए य बोद्धव्वे' सौमसो धनञ्जयश्च बोधव्यौ ज्ञातव्य इत्यर्थः 'अत्थसिद्धे अभिजाए' अर्थसिद्धोऽभिजातः 'अच्चसणे सयंजए चेव' अत्यशनः शतञ्जयश्च 'अग्गिवेसे' उवसमे' अग्निवेश्म उपशमः दिवसाणं होंति नामधेज्जा' एतानि दिवसानां नामधेयानि भवन्ति, तत्रपूर्वाङ्गः प्रथमः सिद्धमनोरमो द्वितीयो, मनोहरस्तृतीयः यशोभद्र श्चतुर्थः, यशोधर पञ्चमः, सर्वकामसमृद्धः षष्ठः, इन्द्रमुद्धाभिषिक्तः सप्तमः, सौमनसोऽष्टमः, धनञ्जयो नवमः, अर्थसिद्धो दशमः, अभिजात एकादशः, अत्यशनो

कहते हैं-'गोयमा! पन्नरस नामधेज्जा पन्नत्ता' हे गौतम! इन पन्द्रह दिनों के लोकोत्तर शास्त्र में १५ नाम कहे हैं 'तं जहा' जैसे-"पुव्वंगे, सिद्धमणोरमे य तत्तो मणोहरे चेव, जसभद्दे य जसधरे सट्ठे सव्वकामसमिद्धेय। इंदमुद्धावसित्तेव सोमणस धणंजए य बोधव्वो अत्थसिद्धे अभिजाए अच्चसणे सयंजए चेव' (१) पूर्वाङ्ग (२) सिद्धमनोरम, (३) मनोहर, (४) यशोभद्र (५) यशोधर सर्वकामसमृद्ध, (७) इन्द्रमूर्धाभिषिक्त, (८) सौमनस (९) धनञ्जय, (१०) अर्थ सिद्ध (११) अभिजात (१२) अत्यशन (१३) शतञ्जय (१४) 'अग्गिवेसे उव समे' अग्निवेश्म एवं (१५) उपशम 'दिवसाणं होंति नाम धेज्जा' इस तरह से ये नाम उन १५ दिनों के होते हैं। पूर्वाङ्ग यह प्रथम दिन का नाम है, सिद्धम नोरम यह दूसरे दिनका नाम है मनोहर यह तृतीय दिन का नाम है यशोभद्र यह चतुर्थ दिनका नाम है यशोधर यह पांचवें दिनका नाम है सर्वकाम समृद्ध

पन्नरस नामधेज्जा पन्नत्ता' हे गौतम! એ પંદર દિવસના લોકોત્તર શાસ્ત્રમાં ૧૫ નામો કહેવામા આવેલા છે. 'तं जहा' જેમકે 'पुव्वंगे, सिद्धमणोरमे य तत्तो मणोहरे चेव, जस भद्देय जसधरे सट्ठे सव्वकामसमिद्धे य इंदमुद्धावसित्तेव सोमणस धणंजए य बोधव्वो अत्थसिद्धे अभिजाए अच्चसणे सयंजए चे।' (૧) પૂર્વાંગ, (૨) સિદ્ધમનોરમ, (૩) મનોહર, (૪) યશોભદ્ર, (૫) યશોધર, (૬) સર્વકામસમૃદ્ધ. (૭) ઇન્દ્ર મૂર્ધાભિષિક્ત, (૮) સૌમનસ, (૯) ધનંજય, (૧૦) અર્થસિદ્ધ, (૧૧) અભિજાત, (૧૨) અત્યશન, (૧૩) શતંજય, (૧૪) 'अग्गिवेसे उवसमे' અગ્નિવેશ્મ તેમજ (૧૫) ઉપશમ. 'दिवस णं होंती नामधेज्जा' આ પ્રમાણે એ નામો તે ૧૫ દિવસોના છે પૂર્વાંગ એ પ્રથમ દિવસનું નામ છે. સિદ્ધમનોરમ એ બીજા દિવસનું નામ છે મનોહર ત્રીજા દિવસનું નામ છે. યશોભદ્ર આ ચતુર્થ દિવસનું નામ છે. યશોધર આ પાંચમાં દિવસનું નામ છે. સર્વકામસમૃદ્ધ આ છઠ્ઠા દિવસનું નામ છે. ઇન્દ્રમૂર્ધાભિષિક્ત આ સાતમા દિવસનું નામ છે. સૌમનસ આ આઠમા દિવસનું નામ છે. ધનંજય એ નવમા દિવસનું નામ છે. અર્થસિદ્ધ એ ૧૧ મા

द्वादशः, शतपञ्चयत्रयोदशः, अग्निवेश्मः चतुर्दशः, उपशमः पञ्चदशः, एतानि दिवसानां नामधेयानि भवन्तीति भावः। एतेषां पञ्चदश दिवसानां पञ्चदशतिथीर्दर्शयितुमाह-'एए-सिणं' इत्यादि, 'एएसिणं भंते ! पण्णरसण्हं दिवसाणं' एतेषां खलु भदन्त ! पञ्चदशानां दिवसानाम् 'कइतिही पन्नत्ता' कति-कियत्संख्यका स्तिथयः प्रज्ञप्ताः-कथिता इति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'पण्णरसतिही पन्नत्ता' पञ्चदश संख्यका स्तिथयः प्रज्ञप्ताः-कथिता इति, 'तं जहा' तद्यथा-'नंदे भद्दे जए तुच्छे पुण्णे पक्खस्स पंचमी' नन्दा प्रथमा भद्रा द्वितीया जया तृतीया तुच्छा चतुर्थी तथा पूर्णा पञ्चमी सा च पूर्णा-पञ्चदश तिथ्यात्मकपक्षस्य पूरकत्वात् 'पुणरवि णंदे भद्दे जए तुच्छे पुण्णे पक्खस्स दसमी' पुनरपि नन्दाषष्टी भद्रा सप्तमी, तथा जया अष्टमी तुच्छा नवमी पूर्णा, दशमी पक्षस्य पञ्चदशतिथ्यात्मकस्य पूरणात् 'पुनरवि णंदे भद्दे जए तुच्छे पुण्णे पक्खस्स पण्णरसी' पुनरपि

**यह छट्ठे दिनका नाम है इन्द्र मूर्धाभिषिक्त यह सातवें दिन का नाम है सौमनस यह आठवें दिनका नाम है धनञ्जय यह नौवे दिनका नाम है अर्थसिद्ध यह १० वे दिनका नाम है अभिजात यह ११ वे दिनका नाम है अत्यशन यह १२ वें दिनका नाम है, शतञ्जय यह १३ वे दिनका नाम है अग्निवेश्म यह १४ वें दिनका नाम है और उपशम यह १५ वें दिनका नाम है।**

**इन १५ दिनों की १५ तिथियोंका कथन**

**इसमें गौतमस्वामीने प्रभुश्री से ऐसा पूछा है-'एएसि णं भंते ! पण्णरसण्हं दिवसाणं कइ तिही पन्नत्ता' हे भदन्त ! इन १५ दिनों की कितनी तिथियां होती है? इसके उत्तर में प्रभु कहते हैं-'गोयमा ! पण्णरसतिही पन्नत्ता' हे गौतम ! १५ तिथियां होती हैं। तं जहा' जैसे-'नंदे भद्दे, जए, तुच्छे, पुण्णे, पक्खस्स पंचमी' नन्दा प्रथमा, भद्रा द्वितीया, जया, तृतीया, तुच्छा चतुर्थी, पूर्णा पंचमी, पुनः नन्दा षष्ठी, भद्रा सप्तमी, जया अष्टमी, तुच्छा नवमी, पूर्णा दशमी, पुनः**

દિવસનું નામ છે. અત્યશન, એ ૧૨ મા દિવસનું નામ છે. શતંજયએ ૧૩ મા દિવસનું નામ છે અગ્નિવેશ્મ એ ૧૪ મા દિવસનું નામ છે. અને ઉપશમ એ ૧૫ મા દિવસનું નામ છે.

એ ૧૫ દિવસોની ૧૫ તિથિઓનું કથન

આમાં શ્રીગૌતમસ્વામીએ પ્રભુને એવી રીતે પ્રશ્ન કર્યો છે કે 'एएसि णं भंते ! पण्णरसण्हं दिवसाणं कइतिही पन्नत्ता' હે ભદંત ! એ ૧૫ દિવસોની કેટલી તિથિઓ કહેવામાં આવી છે? એના જવાબમાં પ્રભુ કહે છે-'गोयमा ! 'पण्णरसतिही पन्नत्ता' હે ગૌતમ ! ૧૫ તિથિઓ હોય છે. 'तं जहा' જેમકે 'नंदे, भद्दे, जए, तुच्छे, पुण्णे पक्खस्स, पंचमी' નંદા પ્રથમા, ભદ્રા દ્વિતીયા, જયા તૃતીયા, તુચ્છા ચતુર્થી, પૂર્ણા પંચમી, પુનઃ નન્દા ષષ્ઠી, ભદ્રા સપ્તમી, જયા અષ્ટમી, તુચ્છા નવમી, પૂર્ણાદશમી, પુનઃ નન્દા એકાદશી, ભદ્રા દ્વાદશી, જયા ત્રયોદશી, તુચ્છા ચતુર્દશી પૂર્ણા પંચદશી. 'एवं ते तिगुणा तिहिओ सव्वेसिं दिवसाणं ति'

नन्दा एकादशी, भद्रा द्वादशी, जया त्रयोदशी, तुच्छा चतुर्दशी, पूर्णा पञ्चदशी सा च पक्षस्य पूरकत्वात् पूर्णा, 'एवं ते तिगुणा तिहीओ सव्वेसिं दिवसाणंति' एवमुक्तप्रकारेण आवृत्ति त्रयरूपेण एता अनन्तरपूर्वोक्ता नन्दाद्याः तिथयः पञ्चत्रिगुणाः पञ्चत्रिगुणाः पञ्चदश संख्यका स्तिथयः, सर्वेषां पञ्चदशानामपि दिवसानां भवन्ति ता एताः पञ्चदशतिथयो दिवसतिथयः कथ्यन्ते। ननु दिवसरात्रितिथ्योः को विशेषो येन तिथिप्रश्नसूत्रस्य पृथग् विधानं कृतमिति चेद् अत्रोच्यते पूर्वपूर्णिमा पर्यवसानं प्रारभ्य द्वाषष्टि भागीकृतस्य चन्द्रमण्डलस्य सर्वदैवानावरणीयौ द्वौ भागौ तौ वर्जयित्वा शेषस्य षष्टिभागात्मकस्य चतुर्भागात्मकः पञ्चदशो भागो यावता कालेन ध्रुवराहुविमानेन आवृतो भवति अमावास्यायाः पर्यवसाने पुनः स एव भागः प्रकटितो भवति तावान् कालविशेषतिथिरिति। दिवसतिथिवक्तव्यतां समाप्य रात्रितिथिवक्तव्यतां वक्तुमाह-'एगमेगस्स णं' इत्यादि, 'एगमेगस्स णं भंते! पक्खस्स' एकैकस्य खलु भदन्त! पक्षस्य 'कइ राईओ पण्णत्ताओ' कति-कियत्संख्यकाः रात्रयः अनन्तरपूर्वोक्तदिवसा

नन्दा एकादशी, भद्रा द्वादशी, जया त्रयोदशी तुच्छा चतुर्दशी और पूर्णा पञ्चदशी 'एवं ते तिगुणा तिहीओ सव्वेसिं दिवसाणंति' इस प्रकार से वे पांच नन्दादिक तिथियां त्रिगुणित होती हुई सब १५ दिनों की हो जाती है इन तिथियों को दिवसतिथियों के नाम से भी कहा गया है

शंका-दिवस और रात्रि की तिथियों में क्या अन्तर है कि जिस से तिथि प्रश्न सूत्रका अलग से विधान करना पडा है? उत्तर-पूर्व की पूर्णिमा के अन्त से लेकर ६२ भाग कृत चन्द्र मंडल के दो भाग सर्वदा ही अनावरणीय रहते हैं उन दो भागों को छोडकर शेष ६० भागात्मक चन्द्रमंडल का चतुर्थ भागात्मक १५ वां भाग जितने काल में ध्रुवराहु के विमान द्वारा आवृत्त होता है और अमावास्या के अन्त में वही भाग पुनः प्रकटित होता है इतने कालविशेष का नाम तिथि हैं दिवस तिथि की वक्तव्यताको समाप्त करके अब सूत्रकार रात्रि-

આ પ્રમાણે એ પાચ નંદાદિક તિથિઓ ત્રિગુણિત થઇને ૧૫ દિવસોની થઇ જાય છે. એ તિથિઓને દિવસ તિથિઓના નામથી પણ કહેવામાં આવેલ છે.

શંકા—દિવસ અને રાત્રિની તિથિઓમાં શું અંતર છે કે જેથી તિથિ પ્રશ્નના સૂત્રનું સ્વતંત્ર રૂપમા વિધાન કરવું પડયું છે?

ઉત્તર—પૂર્વની પૂર્ણિમાના અંતથી માંડીને ૬૨ ભાગ કૃત ચંદ્રમંડળના બે ભાગો સર્વદા અનાવરણીય રહે છે. તે બે ભાગોને છોડીને શેષ ૬૦ ભાગાત્મક ચંદ્રમંડળનો ચતુર્થ ભાગાત્મક ૧૫ મો ભાગ જેટલા કાળમાં ધ્રુવ રાહુના વિમાન વડે આવૃત્ત થાય છે. અને અમાવસ્યાના અંતમાં તેજ ભાગ ફરી પ્રકટિત થાય છે. આટલા કાલ વિશેષનું નામ તિથી છે. દિવસ તિથિની વક્તવ્યતાને સમાપ્ત કરીને હવે સૂત્રકાર રાત્રિ તિથિની વક્તવ્યતાનું કથન કરે છે. 'एगमेगस्स णं भंते! पक्खस्स कइ राईओ पण्णत्ताओ' હે ભદંત! એક-

नामनिज्ञनागरूपाः प्रज्ञप्ताः-कथिता इति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'पण्णरसराईओ पण्णत्ताओ' पञ्चदश-पञ्चदशसंख्यकाः रात्रयो रजन्यः प्रज्ञप्ताः-कथिता इति 'तं जहा' तद्यथा-'पडिवाराई जाव पण्णरसीराई' पतिपद्रात्रियीवत् पञ्चदशी-रात्रिः अत्र यावत्पदेन द्वितीया रात्रिस्तृतीया रात्रिश्चतुर्थी रात्रिः पञ्चमी रात्रिः षष्ठी रात्रिः सप्तमी रात्रि रष्टमी रात्रि नवमी रात्रि र्दशमी रात्रि रेकादशी रात्रि र्द्वादशी रात्रि स्त्रयोदशी रात्रि श्चतुर्दशीरात्रिश्च तासां ग्रहणं भवति, तथा च प्रतिपद्रात्रित आरभ्य पञ्चदशी रात्रि पर्यन्त पञ्चदशरात्रयो भवन्तीति । 'एयासिणं भंते ! पंचदसण्हं राईणं' एतासां पूर्वोक्तानां खलु भदन्त ! पञ्चदशरात्रीणाम् 'कइणामधेज्जा पन्नत्ता' इति-कियत्संख्यकानि नामधेयानि प्रज्ञप्तानि-कथितानीति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'पण्णरसनामधेज्जा पन्नत्ता' पञ्चदशनामधेयानि प्रज्ञप्तानि-कथितानीति, तदेव पञ्चदशभेदं दर्शयति-'तं जहा' इत्यादि, 'तं जहा' तद्यथा-'उत्तमाय सुणक्खत्ता' उत्तमा च सुनक्षत्रा तत्रो·

तिथि की वक्तव्यता का कथन करते हैं-'एगमेगस्स णं भंते ! पक्खस्स कई राईओ पण्णत्ताओ' हे भदन्त ! एक एक पक्षमें कितनी रात्रियां होती कही गई हैं? इसके उत्तर में प्रभु कहते हैं-'गोयमा ! पण्णरसराइओ पण्णत्ताओ' हे गौतम ! एक एकपक्ष में १५ रात्रियां होती कही गई है 'तं जहा' जैसे 'पडिवाराई, जाव पण्णरसीराई, प्रतिपदारात्रि यावत् पञ्चदशी रात्रि यहां यावत्पद से द्वितीयारात्रि तृतीयारात्रि चतुर्थीरात्रि, पंचमीरात्रि, षष्ठीरात्रि सप्तमीरात्रि अष्टमीरात्रि नवमीरात्रि, दशमीरात्रि एकादशीरात्रि, द्वादशीरात्रि, त्रयोदशी-रात्रि, और चतुर्दशीरात्रि, इन शेषरात्रियों का ग्रहण हुआ है। इस प्रकार प्रतिपदा की रात्रि से लेकर पञ्चदशी रात्रि तक १५ रात्रियां होती है

'एयासि णं भंते ! पंचदसण्हं राई णं कइ णामधेज्जा पण्णत्ता' हे भदन्त ! इन १५ रात्रियों के कितने नाम कहे गये हैं ? उत्तर में प्रभु कहते हैं-'गोयमा ! पण्णरसणामधेज्जा पण्णत्ता' हे गौतम ! १५ नाम कहे हैं-'तं जहा' जैसे-'उत्तमाय सुणक्खत्ताय' उत्तमा सुनक्षत्रा-इनमें प्रतिपदा की रात्रि का नाम उत्तमा है

---

એક પક્ષમાં કેટલી રાત્રિઓ કહેવામાં આવેલી છે। એના જવાબમાં પ્રભુ કહે છે-'गोयमा ! पण्णरस राईओ पण्णत्ताओ' હે ગૌતમ ! એક-એક પક્ષમાં ૧૫-૧૫ રાત્રિઓ કહેવામાં આવેલી છે. 'तं जहा' જેમકે 'पडिवा राई जाव पण्णरसीराई' પ્રતિપદારાત્રિ યાવત્ પંચદશીરાત્રિ અહીં યાવત્ પદથી 'દ્વિતીયારાત્રિ, તૃતીયારાત્રિ, ચતુર્થી રાત્રિ, પંચમીરાત્રિ, ષષ્ઠીરાત્રિ, સપ્તમીરાત્રિ, અષ્ટમી-રાત્રિ, નવમીરાત્રી દશમીરાત્રી એકાદશીરાત્રી, દ્વાદશીરાત્રિ, ત્રયોદશીરાત્રિ, અને ચતુર્દશીરાત્રિ' આટલી શેષ રાત્રિઓનું ગ્રહણ થયું છે. આ પ્રમાણે પ્રતિપદાની રાત્રિથી માંડીને પંચદશીરાત્રિ સુધી ૧૫ રાત્રિઓ થાય છે. 'एयासि णं भंते ! पंचदसण्हं राईणं कइ णामधेज्जा पण्णत्ता' હે ભદંત ! એ ૧૫ રાત્રિઓના કેટલા નામો કહેવામાં આવેલા છે? જવાબમાં પ્રભુ કહે છે-'गोयमा ! पण्णरसणामधेज्जा पण्णत्ता' હે ગૌતમ ! ૧૫ નામો કહેવામાં આવેલા છે. 'तं जहा'

त्तमा प्रतिपदात्रिः सुनक्षत्रा द्वितीयारात्रिः 'एलावच्चा जसोहरा' एलापत्या यशोधरा, एलापत्या तृतीयारात्रि यशोधरा चतुर्थीरात्रिः 'सोमणसा चेव तहा' सौमनसा चैव तथा, तथा सौमनसा पञ्चमीरात्रिः 'सिरिसंभूयाय बोद्धव्वा' श्रीसंभूता च षष्ठीरात्रिः बोद्धव्या, 'विजयाय वेजयंति' विजया च सप्तमीरात्रिः, वैजयन्ती अष्टमीरात्रिः 'जयंति अपराजिया य इच्छाय' जयन्ती अपराजिता चेच्छा च, तत्र जयन्ती नवमीरात्रिः, अपराजिता दशमीरात्रिः इच्छा एकादशीरात्रिः 'समाहारा चेव तहा' समाहारा च तथा समाहारा द्वादशीरात्रिः 'तेयाय तहा अइतेया' तेजा त्रयोदशीरात्रिः, अतितेजा चतुर्दशीरात्रिः 'देवाणंदा णिरई' देवानन्दा पञ्चदशी रात्रिः सैव निरती शब्देनापि कथ्यते 'रयणीणं णामधिज्जाइं' रजनीनां रात्री णामेतानि उपर्युक्तानि नामधेयानि पञ्चदश भवन्ति। यथा अहोरात्राणां दिनरात्रि विभागेन नामान्तराणि कथितानि तथादिन तिथीनामपि संज्ञान्तराणि पूर्वं कथितानीति। सम्प्रति

और द्वितीया की रात्रि का नाम सुनक्षत्रा है 'एलावच्चा, जसोहरा' एलापत्य-तृतीया की रात्रि, यशोधरा-चतुर्थी की रात्रि, 'सोमणसा चेव तहा' सौमनसा पंचमी की रात्रि, 'सिरिसंभूया य बोद्धव्वा' श्री संभूता-षष्ठी की रात्रि, 'विजया य वेजयंति' विजया-सप्तमी की रात्रि, वैजयन्ती-अष्टमी की रात्रि 'जयंति अपराजिया य इच्छा य' जयन्ती-नवमी की रात्रि, अपराजिता दशमी की रात्रि इच्छा एकादशी की रात्रि, 'समाहारा चेव तहा' समाहारा-द्वादशी की रात्रि, 'तेया य तहा अइतेया य' तेजा-त्रयोदशी की रात्रि, अतितेजा-चतुर्दशी की रात्रि 'देवाणंदा णिरई' और देवानन्दा-पञ्चदशी की रात्रि का नाम है देवानन्द का दूसरा नाम निरती भी है। 'रयणीणं णामधिज्जाइं' इस प्रकार से ये १५ नाम पन्द्रह तिथियों की रात्रियों के हैं। जिस प्रकार अहोरातों के दिन रात के विभाग को लेकर नामान्तर कहे गये हैं उसी प्रकार से दिन की तिथियों के भी नामा-

જેમકે 'उत्तमाय सुणक्खत्ता य' ઉત્તમા, સુનક્ષત્રા, અમા પ્રતિપાદાની રાત્રિનુ નામ ઉત્તમા છે અને દ્વિતીયાની રાત્રિનું નામ સુનક્ષત્રા છે. 'एलावच्चा, जसोहरा' એલાપત્યા તૃતીયાનીરાત્રિ, યશોધરા ચતુર્થીનીરાત્રિ, 'सोमणसा चेव तहा' સૌમનસા પચમીનીરાત્રિ, 'सिरिसंभूयाय बोद्धव्वा' શ્રી સભૂતા-ષષ્ઠીનીરાત્રિ, 'विजया य वेजयंति' વિજયા સપ્તમીનીરાત્રિ, વૈજયન્ની અષ્ટમીની રાત્રિ 'जयंति अपराजिया य इच्छा य' જયન્તી નવમીની રાત્રિ, અપરાજિતા દશમીનીરાત્રિ, ઇચ્છા એકાદશીનીરાત્રિ, 'समाहारा चेव तहा' સમાહારા-દ્વાદશીની-રાત્રી, 'तेया य तहा अइतेया य' તેજા ત્રયોદશીનીરાત્રિ, અતિતેજા ચતુર્દશીનીરાત્રિ, 'देवाणंदा-णिरई' અને દેવાનંદા-પચદશીની રાત્રિનું નામ છે. દેવાનંદાનું બીજું નામ નિરતી પણ છે. 'रयणीणं णामधिज्जाइं' આ પ્રમાણે આ ૧૫ નામો ૧૫ તિથિઓની રાત્રિઓના છે. જેમ અહોરાતોના દિન-રાતના વિભાગોને લઇને નામાન્તરો કહેવામાં આવેલા છે, તે પ્રમાણે જ દિવસની તિથિઓના પણ નામાન્તરો પહેલાં પ્રગટ કરવામાં આવેલા છે. હવે રાત્રિ

रात्रितिथि संज्ञान्तराणि प्रश्नयन्नाह-'एयासिणं भंते ! पण्णरसण्हं राईणं' एतासा मुपर्युक्ता-नामुत्तमादि पञ्चदशानां रात्रीणाम् 'कइतिही पन्नत्ता' कति-कियत्संख्यका स्थितयः प्रज्ञप्ताः-कथिता इति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'पन्नरसतिही पन्नत्ता' पञ्चदश तिथयः प्रज्ञप्ता-कथिताः 'तं जहा' तद्यथा-'उग्गवई भोगवई जसवई सव्व-सिद्धा सुहणामा' उग्रवती प्रथमा नन्दातिथिरत्रिः भोगवतीद्वितीया भद्रातिथिरात्रिः, तृतीया यशोमती जयातिथिरात्रिः, चतुर्थी सर्वसिद्धा तुच्छातिथिरात्रिः, पञ्चमी शुभनामा पूर्णातिथि-रात्रिः 'पुणरवि उग्गवई भोगवई जसवई सव्वसिद्धा सुहणामा' पुनरपि उग्रवती भोगवती यशोमती सर्वसिद्धा शुभनामा, तत्र उग्रवती षष्ठीनन्दातिथिरात्रिः, भोगवती भद्रातिथिः सप्तमीरात्रिः, यशोमती जयातिथि रष्टमीरात्रिः, सर्वसिद्धा तुच्छातिथि नवमीरात्रिः, शुभ-

---

न्तर पूर्व में प्रकट कर दिये गये हैं

अब रात्रि तिथियों के नामान्तर प्रकट किये जाते हैं

इसमें श्रीगौतमस्वामी ने प्रभुश्री से यही प्रश्न किया है 'एयासिणं भंते ! पण्णरसण्हं राइणं कइ तिही पण्णत्ता' हे भदन्त ! इन उत्तमादि १५ पंद्रह रात्रियों की कितनी तिथियां कही गई हैं? इस के उतर मे प्रभु कहते हैं-'गोयमा ! पण्णरसतिही पन्नत्ता' हे गौतम ! इन उत्तमादि १५ रात्रियों की तिथियां १५ कही गई हैं। 'तं जहा' जैसे-'उग्गवई, भोगवई, जसवई, सव्वसिद्धा, सुहणामा' उग्रवती यह प्रथमा नन्दातिथि की रात्रि का नाम हैं, भोगवती यह द्वितीया भद्रा तिथि की रात्रि का नाम है यशोमती यह तृतीया जयातिथि की रात्रि का नाम है सर्वसिद्धा यह चतुर्थी तुच्छा तिथि की रात्रि का नाम है शुभनामा यह पंचमी पूर्णातिथि की रात्रि का नाम है 'पुणरवि उग्गवई भोगवई जसवई सव्वसिद्धा सुहणामा' उग्रवती यह षष्ठी नन्दातिथि की रात्रि का नाम है भोगवती यह सातवीं भद्रातिथि की रात्रि का नाम है

---

તિથિઓના નામાન્તરો પ્રકટ કરવામાં આવે છે-આમાં ગૌતમસ્વામીએ પ્રભુને એવી રીતે પ્રશ્ન કર્યો છે કે 'एयासिणं भंते ! पण्णरसण्हं राईणं कइतिही पण्णत्ता' હે ભદંત ! એ ઉત્તમાદિ ૧૫ રાત્રિઓની કેટલી તિથિઓ કહેવામાં આવેલી છે? એના જવાબમાં પ્રભુ કહે છે-'गोयमा ! पण्णरसतिही पन्नत्ता' હે ગૌતમ ! એ ઉત્તમાદિ ૧૫ રાત્રિઓની તિથિઓ ૧૫ કહેવામાં આવેલી છે. 'तं जहा' જેમકે 'उग्गवई, भोगवई, जसवई, सव्वसिद्धा सुहणामा' ઉગ્રવતી આ પ્રથમા નંદા તિથિની રાત્રિનું નામ છે. ભોગવતી આ દ્વિતીયા ભદ્રા તિથિની રાત્રિનું નામ છે. યશોમતી આ તૃતીયા જયાતિથિની રાત્રિનું નામ છે. સર્વસિદ્ધા આ ચતુર્થી તુચ્છા તિથિની રાત્રિનું નામ છે. શુભનામા આ પાંચમી પૂર્ણાતિથિની રાત્રિનું નામ છે. 'पुणरवि उग्गवई भोगवई जसवई सव्वसिद्धा सुहणामा' ઉગ્રવતી આ ષષ્ઠી નન્દા તિથિની રાત્રિનું નામ છે. ભોગવતી આ સાતમી ભદ્રાતિથિની રાત્રિનું નામ છે. યશોમતી

नामा पूर्णातिथिर्दशमीरात्रिः 'पुणरवि उग्गवई भोगवई जसवई सव्वसिद्धा सुहणामा' पुनरपि उग्रवती भोगवती यशोमती सर्वसिद्धा शुभनामा, तत्र पुनरपि उग्रवती नन्दातिथिः एकादशीतिथिरात्रिः भोगवती भद्रातिथि द्वादशीरात्रि, यशोमती जयातिथि स्त्रयोदशीरात्रिः, सर्वसिद्धा तुच्छातिथि श्चतुर्दशीरात्रिः, शुभनामा पूर्णातिथिः पञ्चदशीरात्रिरिति ।

यथा नन्दादि पञ्चतिथिनां त्रिरावृत्या पञ्चदश दिवस तिथयो भवन्ति तथैव उग्रवती प्रभृतीनां त्रिरावृत्या पञ्चदशरात्रितिथयो भवन्तीति तद्दर्शयितुमाह- एवं' इत्यादि, 'एवं तिगुणा तिहीओ सव्वेसिं राईणं' एवमुपर्युक्तक्रमेण त्रिगुणिता एता उग्रवती प्रभृतयः सर्वासां पञ्चदशानामपि रात्रीणां भवन्तीति ॥

सम्प्रति एकस्याहोरात्रस्य मुहूर्तान् गणयितुमाह-'एगमेगस्सणं' इत्यादि, एगमेगस्स णं भंते ! अहोरत्तस्स' एकैकस्य खलु भदन्त ! अहोरात्रस्य 'कइमुहुत्ता पण्णत्ता' कति-

---

यशोमती ८ आठवीं जयातिथि की रात्रि का नाम है सर्वसिद्धा यह ९ वीं तुच्छातिथि की रात्रि का नाम है शुभनामा यह १० वीं पूर्णातिथि की रात्रि का नाम है। 'पुणरवि उग्गवई भोगवई जसवई, सव्वसिद्धा, सुहणामा' उग्रवती यह ११ वीं नन्दा तिथि की रात्रि का नाम है भोगवती यह १२ वीं भद्रातिथि की रात्रि का नाम है यशोमती यह १३ वीं तुच्छा तिथि की रात्रि का नाम है सर्वसिद्धा यह १४ वीं तुच्छा तिथि की रात्रि का नाम शुभनामा यह १५ वीं पूर्णातिथि की रात्रि का नाम है। 'एवं तिगुणा तिहीओ सव्वेसिं राईणं' जिस प्रकार नन्दा आदि पांच तिथियों के त्रिगुणित किये जाने पर १५ दिवस तिथियां होती कही गई है, उसी प्रकार उग्रवती आदि पांच रात्रियों को त्रिगुणित करने पर १५ रात्रि तिथियां हो जाती है।

एक अहोरात के मुहूर्तों की गणना-

'एगमेगस्सणं भंते ! अहोरत्तस्स कइ मुहुत्ता पण्णत्ता' गौतमस्वामी ने प्रभु से

---

આ ૮ મી જયાતિથિની રાત્રિનુ નામ છે. સર્વસિદ્ધા આ ૯ મી તુચ્છા તિથિની રાત્રીનું નામ છે. શુભનામા આ ૧૦ મી પૂર્ણાતિથિની રાત્રિનું નામ છે. 'पुणरवि उग्गवई भोगवई, जसवई, सव्वसिद्धा, सुहणामा' ઉગ્રવતી આ ૧૧ મી નંદાતિથિની રાત્રિનું નામ છે. ભોગવતી આ ૧૨ મી ભદ્રાતિથિની રાત્રિનું નામ છે યશોમતી આ ૧૩ મી તુચ્છાતિથિની રાત્રિનું નામ છે. સર્વસિદ્ધા આ ૧૪ મી તુચ્છાતિથિની રાત્રિનું નામ છે. શુભનામા આ ૧૫ મી પૂર્ણાતિથિની રાત્રિનું નામ છે. 'एवं तिगुणा तिहीओ सव्वेसिं राईणं' જે પ્રમાણે નંદા વગેરે પાંચ તિથિઓને ત્રિગુણિત કરવાથી ૧૫ દિવસની તિથિઓ થઈ છે, તે પ્રમાણે ઉગ્રવતી વગેરે પાંચ રાત્રિઓને ત્રિગુણિત કરવાથી ૧૫ રાત્રિતિથિઓ થઈ જાય છે.

એક અહોરાતના મુહૂર્તોની ગણના

'एगमेगस्स णं भंते ! अहोरत्तस्स कइ मुहुत्ता पण्णत्ता' ગૌતમસ્વામીએ પ્રભુને એવી

कियत्संख्यका मुहूर्त्ताः प्रज्ञप्ताः-कथिता इति प्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'तीसं मुहुत्ता पन्नत्ता' त्रिंशन्मुहूर्त्ताः प्रज्ञप्ताः-कथिताः 'तं जहा' तद्यथा तृतीयगाथाया अर्थमाह-'रुद्दे सेए' रुद्रः श्रेयान् प्रथमो रुद्रो द्वितीयः श्रेयान् 'मित्ते वाउ' मित्रस्तृतीयो वायुश्चतुर्थः 'सुवीए तहेव अभिचंदे' सुपीतः पञ्चम स्तथैवाभिचन्द्रः सच षष्ठः 'माहिंदे बलवं बंभे' माहेन्द्रः सप्तमः बलवान् अष्टमः नवमो ब्रह्मा 'बहु सच्चे चेव ईसाणे' बहुसत्योदशमः ईशान एकादशः 'तट्ठेय भाविअप्पा' त्वष्टा द्वादशः भावितात्मा त्रयोदशः, 'वेसमणे वारुणे य आणंदे' वैश्रमण श्चतुर्दशः वरुणः पञ्चदशः आनन्दः षोडशः 'विजएय वीससेणे' विजयः सप्तदशः विश्वसेनोऽष्टादशः 'पायावच्चे उवसमये' प्राजापत्य एकोनविंशतितमः, उपशमो विंशतितमः 'गंधव्वे अग्गिवेसे' गन्धर्व एकविंशतितमः, अग्निवेश्मः द्वाविंशतितमः 'सयवसहे' शतवृषभस्त्रयोविंश तितमः 'आयवेय अममेय' आतपवान् चतुर्विंशतितमः, अम-

---

ऐसा पूछा है-हे भदन्त ! एक अहोरात्र के कितने मुहूर्त्त होते हैं? उत्तर में प्रभु कहते हैं-'गोयमा ! तीसं मुहुत्ता पन्नत्ता' हे गौतम ! एक अहोरात के ३० मुहूर्त्त होते हैं 'रुद्दे, सेये, मित्ते, वाउ, सुवीए तहेव अभिचंदे, माहिंदे बलवं बंभे, बहुसच्चे चेव ईसाणे (१) रुद्रमुहूर्त (२) श्रेयान् मुहूर्त, (३) मित्रमुहूर्त, (४) वायुमुहूर्त (५) सुप्रीतमुहूर्त, (६) अभिचन्द्र मुहूर्त, (७) माहेन्द्रमुहूर्त, (८) बलवान् मुहूर्त (९) ब्रह्मामुहूर्त, (१०) बहुसत्य मुहूर्त, (११) ईशान मुहूर्त, 'तट्ठेय भावियप्पा वेसमणे वारुणेय आणंदे' (१२) त्वष्टा मुहूर्त, (१३) भावितात्मा मुहूर्त (१४) वैश्रमण (१५) वारुण, (१६) आनन्द 'विजएय वीससेणे पायावच्चे उवसमे य, गंधव्वे अग्गिवेसे सयवसहे आयवेय अममे य' (१७) विजयमुहूर्त, (१८) विश्वसेनमुहूर्त (१९) प्राजापत्यमुहूर्त (२०) उपशममुहूर्त (२१) गन्धर्वमुहूर्त (२२) अग्निवेश्ममुहूर्त (२३) शतवृषभ मुहूर्त, (२४) आतपवान् (२५) अमम 'अणवं भोमे

---

રીતે પ્રશ્ન કર્યો છે કે હે ભદંત ! એક અહોરાતના કેટલા મુહૂર્તો થાય છે ? એના જવાબમાં પ્રભુ કહે છે-'गोयमा तीसं मुहुत्ता पन्नत्ता' હે ગૌતમ ! એક અહોરાતના ૩૦ મુહૂર્તો થાય છે-'रुद्दे, सेये, मित्ते, वाउ. सुवीए तहेव अभिचंदे, माहिंदे, बलवं बंभे, बहु सच्चे चेव ईसाणे' (૧) રૂદ્રમુહૂર્ત, ૨) શ્રેયાન્ મુહૂર્ત, (૩) મિત્રમુહૂર્ત, (૪) વાયુમુહૂર્ત, (૫) સુપ્રીતમુહૂર્ત, (૬) અભિચન્દ્રમુહૂર્ત, (૭) માહેન્દ્રમુહૂર્ત, (૮) બલવંમુહૂર્ત, (૯) બ્રહ્મામુહૂર્ત, (૧૦) બહુસત્વમુહૂર્ત, (૧૧) ઇશાનમુહૂર્ત, 'तट्ठेय भावियप्पा वेसमणे वारुणेय आणंदे' (૧૨; ત્વષ્ટામુહૂર્ત, (૧૩) ભાવિતાત્મ મુહૂર્ત, (૧૪) વૈશ્રમણમુહૂર્ત, (૧૫) વારુણમુહૂર્ત, (૧૬) આનન્દમુહૂર્ત, 'विजएय वीससेणे पायावच्चे उवसमेय, गंधव्वे अग्गिवेसे सयवसहे आयवेय अममेय' (૧૭) વિજયમુહૂર્ત, (૧૮) વિશ્વસેનમુહૂર્ત, (૧૯) પ્રાજાપત્યમુહૂર્ત, (૨૦) ઉપશમમુહૂર્ત, (૨૧) ગન્ધર્વમુહૂર્ત, (૨૨) અગ્નિવેશ્મમુહૂર્ત, (૨૩) શતવૃષભમુહૂર્ત, (૨૪) આતપવાન્ (૨૫) અમમ 'अणवं भोमे वसहे, सव्वट्ठे रक्खसे चेव'

मश्च पञ्चविंशतितमः 'अणवं भोमे वमहे' ऋणवान् षड्विंशतितमः भौमः सप्तविंशतितमः वृषभो-ऽष्टाविंशतितमः 'सव्वट्ठे रक्खसे चेव' सर्वार्थ एकोनत्रिंशत्तमः, राक्षस स्त्रिंशत्तमः, ॥ सू. १८॥

मूलम्--कइ णं भंते! करणा पन्नत्ता? गोयमा! एक्कारस करणा-पण्णत्ता, तं जहा--बवं बालवं कोलवं थीविलोयणं गराइ वणिज्जं विट्ठी सउणी चउप्पयं नागं किंत्थुग्घं। एएसि णं भंते! एक्कारसण्हं करणाणं कइकरणा चरा कइकरणा थिरा पन्नत्ता? गोयमा! सत्त करणा चरा चत्तारिकरणा थिरा पन्नत्ता तं जहा--बवं बालवं कोलवं थिविलोयणं गराइवणिज्जं विट्ठी, एतेणं सत्त करणा चरा चत्तारि करणा थिरा पण्णत्ता, तं जहा--सउणी चउप्पयं णागं किंत्थुग्घं एएणं चत्तारि करणा थिरा पन्नत्ता। एएणं भंते! चरा थिरा वा कया भवंति? गोयमा! सुक्कपक्ख-स्स पडिवाए राओ बवे करणे भवइ, बितियाए दिवा बालवे करणे भवइ राओ कोलवे करणे भवइ, तइयाए दिवा थीविलोयणं करणं भवइ, राओ गराइ करणं भवइ चउत्थीए दिवा वणियं राओ विट्ठी पंचमीए दिवा बवं राओ बालवं, छट्ठीए दिवा कोलवं राओ थीविलोयणं, सत्तमीए दिवागराइ रायो वणिज्जं, अट्ठमीए दिवा विट्ठी रायो बवं, नवमीए दिवा बालवं रायो कोलवं, दसमीए दिवा थीविलोयणं रायो गराइं, एक्कारसीए दिवा वणिज्जं रायो विट्ठी, बारसीए दिवा बवं रायो बालवं, तेरसीए दिवा कोलवं रायो थीविलोयणं, चउद्दसीए दिवा गराइं करणं रायो वणिज्जं, पुण्णिमाए दिवा विट्ठीकरणं रायो बवं करणं भवइ। बहुल पक्खस्स पडिवाए दिवा बालवं रायो कोलवं बितीयाए दिवा थीविलो-यणं, रायो गराइं, ततीयाए दिवा वणिज्जं रायो विट्ठी, चउत्थीए दिवा बवं राओ बालवं, पंचमीए दिवा कोलवं रायो थीविलोयणं छट्ठीए दिवा-गराइं रायो वणिज्जं, सत्तमीए दिवा विट्ठी रायो बवं, अट्ठमीए दिवा बालवं, रायो कोलवं नवमीए दिवा थीविलोयणं रायो गराइ, दसमीए

---

वसहे सव्वट्ठे रक्खसे चेव' (२६) ऋणवान्, (२७) भौम (२८) वृषभ (२९) सर्वार्थ एवं (३०) राक्षस ॥१८॥

---

(२६) ઋણુવાન્, (२७) ભૌમ (२८) વૃષભ, (२९) સર્વાર્થ, તેમજ (३०) રાક્ષસ ॥સૂ० ૧૮॥

दिवा वणिज्जं रायो विट्ठी, एक्कारसीए दिवा बवं रायो बालवं, बारसीए दिवा कोलवं रायो थीविलोयणं, तेरसीए दिवा गराइं रायो वणिज्जं, चउद्दसीए दिवा विट्ठी रायो सउणी, अमावासाए दिवा चउप्पयं रायो णागं, सुक्कपक्खस्स पडिवए दिवा किंत्थुग्घं करणं भवइ त्ति ॥सू० १९॥

छाया-कति खलु भदन्त ! करणानि प्रज्ञप्तानि ! गौतम ! एकादश करणानि प्रज्ञप्तानि, तद्यथा-बवं बालवं कौलवं स्त्रीविलोचनं गरादिवणिजं विष्टिः शकुनिः चतुष्पदं नागं किंस्तुघ्नम् । एतेषां खलु भदन्त ! एकादशानां करणानां कति करणानि चराणि, कति करणानि स्थिराणि ? गौतम ! सप्तकरणानि चराणि चत्वारि करणानि स्थिराणि प्रज्ञप्तानि, तद्यथा-बवं बालवं कोलवं स्त्रीविलोचनं गरादिवणिजं विष्टिः, एतानि खलु सप्तकरणानि चराणि । चत्वारि करणानि स्थिराणि प्रज्ञप्तानि । एतानि खलु भदन्त ! चराणि स्थिराणि वा कदा भवन्ति, गौतम ! शुक्लपक्षस्य प्रतिपदि रात्रौ बवं करणं भवति, द्वितीयस्यां बालव करणं भवति, रात्रौ कोलवं करणं भवति, तृतीयायां दिवास्त्रीविलोचनं करणं भवति, रात्रौ गरादिकरणं भवति, चतुर्थ्यां दिवा वणिजं रात्रौ विष्टिः, पञ्चम्यां दिवा बवं रात्रौ बालवम्, षष्ट्यां दिवा कोलवं रात्रौ स्त्रीविलोचनम्, सप्तम्यां दिवा गरादिः रात्रौ वणिजम्, अष्टम्यां दिवा बालवं रात्रौ बवम् नवम्यां दिवा बालवं रात्रौ कौलवम्, दशम्यां दिवा स्त्रीविलोचनं रात्रौ गरादिः, एकादश्यां दिवा वणिजं रात्रौ विष्टिः, द्वादश्यां दिवा बवं रात्रौ बालवम्, त्रयोदश्यां दिवा कोलवं रात्रौ स्त्रीविलोचनम्, चतुर्दश्यां दिवा गरादि करणं रात्रौ वणिजम् पूर्णिमायां दिवा विष्टिकरणम् रात्रौ बवं करणम् भवति । बहुलपक्षस्य प्रतिपादि दिवा बालवं रात्रौ कोलवम्, द्वितीयायां दिवा स्त्रीविलोचनं रात्रौ गरादि तृतीयायां दिवा वणिजं रात्रौ विष्टिः, चतुर्थ्यां दिवा बवं रात्रौ बालवम्, पञ्चम्यां दिना कोलवं रात्रौ स्त्रीविलोचनम्, षष्ट्यां दिवा गरादि रात्रौ वणिजम् सप्तम्यां दिवा विष्टिः रात्रौ बवम्, अष्टम्यां दिवा बालवं रात्रौ कोलवम्, नवम्यां दिवा स्त्रीविलोचनं रात्रौ गरादि, दशम्यां दिवा वणिजं रात्रौ विष्टिः, एकादश्यां दिवा बवं रात्रौ बालवम्, द्वादश्यां दिवा कोलवं रात्रौ स्त्रीविलोचनम्, त्रयोदश्यां दिवा गरादि रात्रौ वणिजम्, चतुर्दश्यां दिवा विष्टिः रात्रौ शकुनिः, अमावास्यायां दिवा चतुष्पदं रात्रौ नागम्, शुक्लपक्षस्य प्रतिपदि दिवा किंस्तुघ्नं करणं भवति इति ॥ सू० १९ ॥

टीका-'कइणं भंते' कति-कियत्संख्यकानि खलु भदन्त ! 'करणा पन्नत्ता' करणानि ज्योतिः शास्त्रस्य परिभाषा विशेषरूपाणि प्रज्ञप्तानि कथितानीति करणसंख्या विषयकः प्रश्नः,

'कइणं भंते ! करणा पण्णत्ता' इत्यादि

टीकार्थ-गौतमस्वामी ने प्रभु से ऐसा पूछा है-'कइणं भंते ! करणा पण्णत्ता' हे भदन्त ! ज्योतिष्शास्त्र की परिभाषा विशेषरूप करण कितने कहे गये हैं ?

भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम! 'एक्कारसकरणा पन्नत्ता' एकादश-एकादशसंख्या विशिष्टानि करणाणि प्रज्ञप्तानि कथितानीति भगवत उत्तरम्। एकादश भेदानेव दर्शयितुमाह-'तं जहा' इत्यादि, 'तं जहा' तद्यथा-'बवं बालवं' ववं बालवम् तत्र ववनामकं प्रथमं करणं द्वितीयतु बालवम् 'कोलवं थीविलोयणं' कोलवं स्त्रीविलोचनम्, कोलवनामकं तृतीयं करणं चतुर्थं स्त्रीविलोचनम्, अस्य चतुर्थकरणस्यान्यत्र तैतिल मित्यपि नामकथ्यते, 'गराइवणिजं' गरादि वणिजम्, पञ्चमं गरादि करम् अस्यैव स्थानान्तरे गर इति नाम्नापि व्यवहारो दृश्यते, वणिजं षष्ठं करणम् 'विट्ठी सउणी' विष्टिः शकुनिः, सप्तमं करणं विष्टि रष्टमंतु शकुनिः 'चउप्पयं नागं किंत्थुग्घं' चतुष्पदं नागं किंस्तुघ्नम्, नवमंतु करणं चतुष्पदनामकं दशमं नागनामकं करणम् एकादशं किंस्तुघ्ननामकं करणं भवतीति तदेतानि एकादश करणानि नामतः कथितानि इति। एतेषामुपर्युक्तकरणानां मध्ये कानि करणानि चराणि कानि च स्थिराणि, इति चरस्थिरत्वादि व्यक्तिं प्रश्नयितुमाह-'एएसिणं' इत्यादि, 'एएसिणं भंते! एक्कारसण्हं करणाणं' एतेषामुपर्युक्तानां हे भदन्त! एकादशानाम् एकादश संख्यकानां करणानां ववादीनां मध्ये 'कइकरणा चरा कइ करणा थिरा' कति क्रिय-

---

इसकेउत्तर में प्रभु कहते हैं-'गोयमा! एक्कारसकरणा पण्णत्ता' हे गौतम! करण ११ ग्यारह कहे गये हैं 'तं जहा' जो इस प्रकार से हैं-'बवं बालवं' (१) बव करण (२) बालवकरण (३) 'कोलवं थीविलोयणं' कौलवकरण, (४) स्त्री विलोचन करण-तैतिल करण 'गराइवणिज' (५) गरादि करण 'गरकरण-(६) वणिज करण 'विट्ठी सउणी' (७) विष्टिकरण (८) शकुनिकरण (९) 'चउप्पयं नागं किंत्थुग्घं' चतुष्पद करण (१०) नाग करण एवं (११) किंस्तुघ्न करण इस प्रकार से इन करणों के नाम हैं। 'एएसिणं भंते! एगारसण्हं करणाणं मज्झे कइ करणा चरा कई करणा थिरा' हे भदन्त! इन पूर्वोक्त ११ करणों में कितने करण

---

'कइणं भंते! करणा पण्णत्ता' इत्यादि-

ટીકાર્થ-ગૌતમસ્વામીએ પ્રભુને એવી રીતે પ્રશ્ન કર્યો છે કે-'कइणं भंते! करणा पण्णत्ता' હે ભદંત! જ્યોતિષ્શાસ્ત્રની પરિભાષા વિશેષ રૂપકરણો કેટલા કહેવામાં આવેલા એના જવાબમાં પ્રભુ કહે છે-'गोयमा! एक्कारस करणा पण्णत्ता' હે ગૌતમ! કરણ ૧૧ અગિયાર કહેવામાં આવેલા છે. 'तं जहा' જે આ પ્રમાણે છે-'बवं बालवं' (૧) બવકરણ, (૨) બાલવકરણ (૩) 'कोलवं थीविलोयणं' કૌલવકરણ, (૪) સ્ત્રી વિલોચનકરણ-તૈતિલકરણ, 'गराइवणिजं' (૫) ગરાદિકરણ 'गरकणं' (૬) વણિજકરણ, 'विट्ठीसउणी' (૭) વિષ્ટિકરણ, (૮) શકુનિકરણ (૯) 'चउप्पयं नागं किंत्थुग्घं' ચતુષ્પદકરણ, (૧૦) નાગકરણ તેમજ (૧૧) કિંસ્તુઘ્નકરણ આ પ્રમાણે એ કરણોના નામો છે. 'एएसिणं भंते! एगारसण्हं करणाणं मज्झे कइ करणा चरा कइ करणा थिरा' હે ભદંત! એ પૂર્વોક્ત ૧૧ કરણોમાં કેટલા કરણ-ચર છે અને કેટલા કરણો સ્થિર છે? જે કરણો ગતિવાળા હોય છે-તે ચર અને જેઓ ગતિવિહોણા

त्संख्यकानि करणानि चराणि-गतिमन्ति कतिच-कियत्संख्यकानि च करणाणि स्थिराणि-गतिरहितानि प्रज्ञप्तानि-कथितानीति करणानां चरस्थिरत्वविषयकः प्रश्नः, श्रीभगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'सत्तकरणा चरा चत्तारि करणा थिरा पन्नत्ता' एकादश करणेषु मध्ये सप्त-सप्त संख्यकानि करणानि चराणि भवन्ति तथा तेष्वेव मध्ये चत्वारि करणानि स्थिराणि प्रज्ञप्तानि-कथितानि, तत्र कानि सप्त चराणि कानिच चत्वारि स्थिराणि इति दर्शयितुमाह-'तं जहा' इत्यादि, 'तं जहा' तद्यथा-'बवं बालवं कोलवं थीविलोयणं गराइ वणिजं विट्ठी' बवं बालवं कोलवं स्त्रीविलोचनं गरादिवणिजं विष्टिः 'एएणं सत्तकरणा चरा' एतानि खलु ववादीनि सप्तकरणानि चराणि भवन्तीति 'चत्तारि करणा थिरा' चत्वारि-चतुः संख्यकानि करणानि स्थिराणि प्रज्ञप्तानि-कथितानि इति, तान्येव स्थिराणि चत्वारि करणानि दर्शयितुमाह-'तं जहा' इत्यादि, 'तं जहा' तद्यथा-'सउणी चउप्पयं णागं कित्थुग्घं' शकुनिश्चतुष्पदं नागं किंस्तुघ्नम्, 'एतेणं चत्तारि करणा थिरा पन्नत्ता' एतानि शकुन्यादीनि चत्वारि करणानि स्थिराणि प्रज्ञप्तानि-कथितानीति, एतेषामेकादश करणानां कस्मिन् स्थाने समये वा चरत्वं कुत्रवा स्थिरत्वमिति दर्शयितुं प्रश्नयन्नाह-'एएणं भंते !' इत्यादि, 'एएणं भंते !' एतानि एकादशानि करणानि खलु भदन्त ! 'चरा थिरावा कया

---

चर हैं और कितने स्थिर हैं ? जो करण गतिवाले होते हैं वे चर और जो गति रहित होते हैं वे स्थिर करण कहलाते हैं। इसके उत्तर में प्रभु कहते हैं-'गोयमा! सत्तकरणा चरा चत्तारि करणा थिरा' हे गौतम ! सात करण चर हैं और ४ करण स्थिर हैं। 'तं जहा' जैसे-'बवं बालवं कोलवं थीविलोयणं गराइ वणिजं विट्ठी बव' करण बालव करण, कौलवकरण स्त्रीविलोचन करण गरादिकरण, वणिज करण, और विष्टीकरण 'एए णं सत्त करणा चरा' ये सात करणा चर हैं और 'चत्तारि करणाथिरा' तथा इनसे अतिरिक्त चार जो करण हैं वे स्थिर करण हैं 'तं जहा' उनके नाम इस प्रकार से हैं-'सउणी चउप्पयंणागं किंत्थुग्घं' शकुनि करण, चतुष्पद करण, नाग करण और किंस्तुग्घ करण 'एए णं चत्तारि करणा थिरा पण्णत्ता' इस तरह ये शकुनि आदि चार करण स्थिर कहे गये हैं। 'एए णं भंते !

---

હોય છે તેઓ સ્થિરકરણ કહેવાય છે. આના જવાબમાં પ્રભુ કહે છે-'गोयमा ! सत्तकरणा चरा चत्तारि करणा थिरा' હે ગૌતમ ! સાતકરણ ચર છે અને ચારકરણ સ્થિર છે. 'तं जहा' જેવા કે-बवं बालवं कोलवं थीविलोयणं गराइ वणिजं विट्ठी' બવકરણ બાલવકરણ, કૌલવકરણ સ્ત્રીવિલોચનકરણ, વણિજકરણ અને વિષ્ટીકરણ 'एएणं सत्तकरणा चरा' આ સાત કરણોચર છે અને 'चत्तारि करणा थिरा' તથા આ સિવાયના ચાર કરણ છે તે સ્થિરકરણ છે 'तं जहा' તેમના નામ આ મુજબ છે-'सउणी चउप्पयं णागं किंत्थुग्घं' શકુનિકરણ, ચતુષ્પદકરણ, નાગ-કરણ અને કિંસ્તુઘ્નકરણ 'एएणं चत्तारी करणा थिरा पण्णत्ता' આ રીતે આ શકુની આદિ ચાર કરણ સ્થિર કહેવામાં આવ્યા છે. 'एएणं भंते ! चरा थिरा वा कया भवंति' હે ભદન્ત !

